रग्निसूर्ययोः प्रकृष्टंतेजः दैहिकास्त्वऽप्सु बाह्या अपः बाह्याः पृथिव्यादयः शरीरपार्थिवभागेषु मनसि चंद्रं श्रोत्रे दिशः पादेंद्रिये-
विष्णुम् बले हरं वागिंद्रिये अग्निम् पाय्विंद्रिये मित्रमुपस्थेंद्रिये प्रजापतिं लीनमेकत्वेन भावयेत् एवमाध्यात्मिकभूतादिकं लीन
मेकत्वेन भावयित्वा योयमग्न्यादीनां दैहिकादिनियमो यच्च कर्मणां फलं प्रतिनियतं तत्सर्वं परमात्मानं तथा चैतस्यैवाक्षरस्य प्रशासने
गार्गि तर्पयति तथा भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिंद्रश्च वायुश्च मृत्युर्धावति पंचम इति १२० १२१ प्रशासितार-
मिति प्रशासितारं नियंतारं ब्रह्मादिस्तंबपर्यंतस्य चेतनाचेतनस्य जातेः योयमग्न्यादीनां यो यथादिनियमो यश्चादित्यादीनां प्र
मणादिनियमो यश्च कर्मणां फलं प्रतिनियतमेतत्सर्वं परमात्माधीनं तथा चैतस्य वाऽक्षरस्य प्रशासने गार्गि याज्ञवल्क्योपनिषदः तथा भयाद-
स्याग्निस्तपति भयात्तपति सूर्यः भयादिंद्रश्च वायुश्च मृत्युर्धावति पंचम इति तथा अणोरणीयांसं सर्वात्मत्वात्तथा च श्रुतिः बाला

स्वंसन्निवेशयेत्स्वेषु चेष्टनस्पर्शनेऽनिलम् पक्तिदृष्ट्योः परं तेजः स्नेहेऽपो गां च मूर्तिषु १२० मनसीं
दुं दिशः श्रोत्रे क्रांते विष्णुं बले हरम् वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम् १२१ प्रशासितारं सर्वे
षामणीयांसमणोरपि रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् १२२ एतमेके वदंत्यग्निं मनुमन्ये प्र-
जापतिम् इंद्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् १२३

ग्रशतभागस्य शतधा कल्पितस्य च भागो जीवेति विज्ञेयः सचा
नंत्याय कल्पते रुक्माभं यद्यप्यशब्दमस्पर्शमरूपमव्ययमित्याद्युपनिषदा रूपं परमात्मनो निषिद्धम् तथाप्युपासनाविशेषेषु
रुक्मवर्णाभम् अतएव य एषोऽन्तरादित्ये हिरण्मय इत्यादि छांदोग्योपनिषत् स्वप्नधीगम्यं दृष्टांतोयम् स्वप्नधीसदृशज्ञानग्राह्यं
यथा स्वप्नधीः चक्षुरादिबाह्येंद्रियोपरमे मनोमात्रेणजन्या तएवमात्मधीरपि अतएव व्यासः नैवासौ चक्षुषा ग्राह्यो न च शिष्टैर
पींद्रियैः मनसा तु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिः एवंविधं परात्मानमनुचिंतयेत् १२२ एतमिति एतं च परमात्मानं अग्नित्वेन
याज्ञिका उपासते तथा तमेकमग्निं इत्यादि धर्मं उपासते अन्ये पुनः स्व सूत्रात्स्वष्ट्राख्यप्रजापतिरूपतया उपासते एके पुनरैन्द्र

र्थ्यंयोगादिंद्ररूपतयाउपासते अपरेपुनः प्राणत्वेनोपासते सर्वाणि भूतादिइमानिभूतानिप्राणमेवाभिसंविशंतिप्राणमूर्जिनइ
त्यादिश्रुतिदर्शनात् अपरेपुनरपगतप्रपंचात्मकंसर्वदा आनंदस्वरूपंपरमात्मानमुपासते मूर्त्तामूर्त्तस्वरूपेचब्रह्मणिसर्वाएवो
पासनाश्रुतिप्रसिद्धाभवंति १२३ एषइति एषआत्मासर्वान्प्राणिनः पंचभिःपृथिव्यादिभिर्महाभूतैः शरीरारंभकैः परिगृह्यपू
र्वजन्मार्जितकर्मापेक्षयाउपस्थितिविनाशैरथादिचक्रवत्असकृदुपावर्त्तमानैः आमोक्षात्संसारिणः कुर्वंति इदानींमोक्षत्वेनो
क्तसर्वधर्मश्रेष्ठतयासर्वत्रपरमात्मदर्शनमनुष्ठेयत्वेनोपसंहरति १२४ एवंयःसर्वभूतेष्विति एवंसर्वभूतेषुचात्मानमित्याद्युक्त
प्रकारेणयः सर्वेषुभूतेषु अवस्थितमात्मानमात्मनापश्यतिसब्रह्मसाक्षात्कारात्परंश्रेष्ठंपदस्थानंब्रह्मप्राप्नोतितत्रात्यंतंलीयतेमु

एषसर्वाणिभूतानिपंचभिर्व्याप्यमूर्त्तिभिः जन्मवृद्धिक्षयैर्नित्यंसंसारयतिचक्रवत् १२४ एवंयः
सर्वभूतेषुपश्यत्यात्मानमात्मना ससर्वसमतामेत्यब्रह्माभ्येतिपरंपदम् १२५ इत्येतन्मानवंशास्त्रं
भृगुप्रोक्तंपठन्द्विजः भवत्याचारवान्नित्यंयथेष्टांप्राप्नुयाद्गतिम् १२६ इतिमानवेध
र्मशास्त्रेभृगुप्रोक्तायांसंहितायांद्वादशोऽध्यायः १२ समाप्तेयंमनुसंहिता ५ ५ ५

क्तोभवतीत्यर्थः १२५ इत्येतदिति समाप्त्यर्थइतिशब्दः एतन्मनुस्मृतिशास्त्रंभृगुणाप्रकर्षेणोक्तंद्विजातिःपठन्विहितानुष्ठान
निषिद्धवर्जनात्सदाचारवान्भवतितथाऽपेक्षितांचस्वर्गापवर्गादिरूपांगतिंप्राप्नुयादिति १२६ सारासारवचःप्रपंचनविधौमे
धातिथेश्चातुरीस्तोकंवस्तुनिगूढमल्पवचनाद्गोविंदराजोजगौ ग्रंथेऽस्मिंधरणीधरस्यबहुशःस्वातंत्र्यमेतावतास्पष्टंमानवमर्थ
तत्त्वमखिलंवक्तुंकृतोयंश्रमः १ प्रायोमुनिभिर्विरतंकथयत्येषामनुस्मृतेरर्थम् दशभिर्ग्रंथसहस्रैःसप्तदशयुताकृतावृत्तिः २
सेयंमयामानवधर्मशास्त्रेव्यथाथिरत्तिर्विदुषांहिताय दुर्बोधजातेदुरितक्षयायभूयात्ततोमेजगतामधीशः ३ इतिवारेंद्र
नन्दनवासीयदिवाकरात्मजश्रीमत्कुल्लूकभट्टविरचितायांमन्वर्थमुक्तावल्यांमनुवृत्तौद्वादशोऽध्यायःसमाप्तः इतिश्रीकुल्लूक
भट्टविरचितामन्वर्थमुक्तावलीसमाप्ता ५ ५ श्रीकृष्णार्पणमस्तु श्रीरस्तु शुभमस्तु ५ ५ ५

श्रीधुलेस्वरजीकेनजीकश्रीमहाराजरणछोडजीकामंदरमेंमहंतमथुरादासजीरामदासजीजीसकीपोथीस्नूं
छापखानामेंछपाई.

हेंपुस्तक बापूसदाशिवशेटहेगिष्टेशेटयेश्रीवर्धनकरयांणीं आपले छापखान्यांत छापिलें मुकाम मुंबई.

शके १७८० कालयुक्तनामसंवत्सरेवैशाखेमासेशुक्लपक्षेतृतीयांतिथौभृगुवासरेतद्दिनेसमाप्तः ५

इतिसटीकमनुस्मृतिःसमाप्ता.